योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM

Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 257 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 12 जुलाई 2021 सोमवार | पृष्ठ-4 | मूल्य- 2 रुपये

## सुभाषितम्

**अयद्वादापाद्य त्रिभुवनमवैरव्यतिकरं**
**दशास्यो यद्बाहूनभृत-रणकण्डू-परवशान्।**
**शिरःपद्मश्रेणी-रचितचरणाम्भोरुह-बलेः**
**स्थिरायास्त्वद्भक्तेस्त्रिपुरहर**
**विस्फूर्जितमिदम्॥**

**भावार्थः**

आपके परम भक्त रावण ने पद्म की जगह अपने नौ-नौ मस्तक आपकी पूजा में समर्पित कर दिये। जब वो अपना दसवाँ मस्तक काटकर अर्पण करने जा रहा था तब आपने प्रकट होकर उसको वरदान दिया। इस वरदान की वजह से ही उसकी भुजाओं में अटूट बल प्रकट हुआ और वो तीनो लोक में शत्रुओं पर विजय पाने में समर्थ रहा। ये सब आपकी दृढ भक्ति का फल है ।

## संक्षिप्तवार्ताः

### उत्तरप्रदेशेरात्रि कर्फ्यू इत्यस्मिन् शैथिल्यम्

**लखनऊ।** उत्तरप्रदेशे रात्रि कर्फ्यू इदानीम् रात्रौ 10 वादनतः प्रातः 6 वादनपर्यन्तम् प्रयुक्तो भविष्यति। अनेनप्रकारेण द्विघण्टात्मकंकालस्य न्यूनीकृत्य सावकाशंप्रदत्तम्। एतत् पूर्वंअस्य समयः रात्रौ 9 वादनतः प्रातः 7 वादनपर्यन्तम् आसीत्।

### कोप्पा चषकः अर्जन्टीनायै

मारक्काना कोप्पा अमेरिक्का पादकन्दुक-क्रीडापरम्परायाः स्वप्नसमानान्त्य-क्रीडायां चरित्र-परिसमाप्तिः। ब्रसीलदलम् अप्रतिरुद्धेनैकेन लक्ष्यकन्दुकेन पराजित्य लयणल् मेसि नामकस्य नायकस्य नेतृत्वे विद्यमानः अर्जन्टीनादलः विजयीभूतः। एय्जल् डि मरिया नामकः लक्ष्यकन्दुकं प्राप्तवान्। 28 संवत्सराणामन्तरालानन्तरमेव अर्जन्टीनादलस्य कश्चन किरीटप्राप्तिः इत्येतत् कोप्पा अमेरिक्का पादकन्दुक क्रीडापरम्परायाः चरित्र परिसमाप्तिः।

● **रविवासरे आकाशीय वज्रपातेन एकस्य वृद्धस्य मृत्युरपि अभवत्।**

विश्वजनसंख्या दिवसस्य शुभारम्भं, प्रदेशस्तरे जनसंख्यास्थिरतापक्षस्य अन्तर्गत चरणबद्धरूपेण आयोजितं

# योगी महाभागः जनसंख्या स्थिरीकरणम् कल्यणास्य दिशि सर्वजनसाहचर्येण प्रदेशस्य समुत्थानं कर्तुं संदेशं प्रदत्तवान्





**लखनऊ ।** 12 जुलाई इत्यनुसारं विश्वजनसंख्या दिवसस्य शुभारम्भं प्रदेशस्तरे माननीय मुख्मन्त्री योगी महोदयः लखनऊ मुख्यालये प्रातः 11:30 इति समये कृतवान्। 'यस्य आनलाइन' इत्यनुसारं सजीवप्रसारणं जातम्। अस्मिन्मध्ये माननीय मुख्य मन्त्री महोदयः स्वास्थ्यक्षेत्रस्य कार्याणां प्रशंसामकरोत्। आगन्तृसमये 'डिजिटल हेल्थ' इति व्यवस्थामाध्यमेन जनसंख्या नियन्त्रणम्, स्थिरीकरणम् च कल्यणास्य दिशि सर्वजनसाहचर्येण प्रदेशस्य समुत्थानं कर्तुं संदेशं प्रदत्तवान्। विश्वजनसंख्यादिवस द्वयोः पक्षयोः क्रमसः दम्पत्तिसम्पर्कपक्षो दिं 27 जूनमासतः 10 जुलाईमासयावत् तथा 11 जुलाई मासतः 31 जुलाई 2021 यावत् जनसंख्यास्थिरतापक्षस्य अन्तर्गत चरणबद्धरूपेण आयोजितं करिष्यते ।




**जनसंख्या नियन्त्रणम्, स्थिरीकरणम् च कल्यणास्य दिशि सर्वजनसाहचर्येण प्रदेशस्य समुत्थानं कर्तुं संदेशं प्रदत्तवान्।**



जनसंख्या नियंत्रणे

**राजनीतिः**









**संगमनगर्यां रविवासरे मध्याह्नेगर्जनेन सह तीव्रतरा वृष्टिः अभवत्। वृष्टेः जलेन राजमार्गे जलप्लावनम्।**

## सम्पादकीयम्

# कठिनस्य दण्डस्य प्रावधानं भवेत्

कोरोना अति अपायपूर्णेन व्याप्तं। चिकित्सालयेसु पर्यंकानां न्यूनतया समस्या विकराला भवति। एकतः सर्वकारस्तरे बहुविध प्रयासाः क्रियन्ते तर्हि तत्रैव सामान्य जनाः अपि एक बारं पुनः स्व स्व विधिना अस्मिन् युद्धे प्रतिभागं कुर्वन्ति। संकटस्य अस्यां वेलायां जनाः सहायतायै यथा हस्त प्रसारणे संलग्ना सन्ति तत् सिद्धयते इदं यत् कोरोना यथाशक्तिः मानवान् हन्यते परं च मानवता इदानीं जीवन्ता अस्ति। कश्चित् गृहे-गृहे गत्वा छद्ममुखं वितरति, तर्हि कश्चित् एकान्तवासिने संक्रमितेभ्यः भोजनोपलब्धायते। क्वचित् दाहसंस्काराय आर्थिकं सहयोगं क्रियते। संकट काले समाजस्य कतिपया जनाः मानवतायाः प्रतिमानं सिद्धयन्ति। समाजे च एकानवा आशा जागृयन्ते। परं च अपरतः कोरोना आपदां अवसरे परिवर्तकान् तत्वान् यथा अमरतायाः वरदानं प्राप्तं। चेत् एतादृशः नैवाभवत् तर्हि आवश्यक उपकरणेसु ओषधीनांच कृष्णापणत्वं न भवतिस्म। विडम्बना इयमस्ति यत् एकतः आक्सीजनस्य, विशेष ओषधीनां च अभावे असंख्य जनाः कोरोनया कालकवलिताः भवन्ति अपरतः आक्सीमीटर, आक्सीजन गैस सिलेण्डर रेमडेसिविर सदृशान् ओषधीनां निर्धारितं मूल्यात् अति गुणाधिके मूल्ये विक्रीयन्ते। निस्सन्दोऽयं मानवतायाः विरूद्धे गम्भीरो अपराधः अस्ति। एभिः तत्वैः शमनार्थं कठिनस्य दण्डस्य प्रावधानं भवेत् येन कश्चिदपि व्यक्तिः विकलानां जनानां विवशतायाः लाभः प्राप्तुं न क्षमः भवितुं शक्यते।

# ‘अप्सु यायावरः प्रवपेत पिण्डान्’

अथेदानीं स्थानिवद्भावस्य निषेधसूत्राणि उपस्थाप्यन्ते। प्रथमस्तत्र ‘द्विर्वचनेऽचि’ इति। रूपातिदेशसूत्रमिदम्। द्विरुच्यते येन परनिमित्तेन तद् द्विवचनं द्विवचननिमित्तमिति यावत्। अचीति विशेषणम्। ‘अचः परस्मिन् पूर्वविधौ’ इत्यत्र अच इति, ‘स्थानिवदादेशेऽनल्विधौ’ इत्यत आदेशः इति ‘न पदान्त....’ इत्यतो नेति चानुवर्तते। एवं द्वित्वे कर्तव्ये सति इत्यपि लभ्यते। तेन द्वित्वनिमित्वे अचि परे अच् आदेशो न स्थानिवत् स्यात् द्वित्वे कर्तव्ये इति वृत्तिः। यद्यपि काशिकावृत्तौ अजादेशः स्थानिवत्स्यादिति रूपादिदेशपक्षः स्वीकृतः तथाप्यादेशनिषेधपक्षेऽपि भाष्यारूढ इति स एव सिद्धान्तकौमुद्यां अनुगृहीतः। फलं चोभयात्र तुल्यम्। किञ्च आदेशम् अङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु ‘प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्’ इति न्यायात्। ‘न पदान्त.....’ इति निषेधान्तरं पाठोऽप्येवं सत्यनुगृहीत इति श्रेयानयं पक्षः। तथाहि चक्रे इत्युदाहरणम्। कृधातोः लिटि तादेशे ‘लिटस्तझरेशिरेच्’ इति एशि अनुबन्धलोपे ‘कृ ए’ इत्यवस्थायां ‘लिटि धातोरनभ्यासस्य’ इति द्वित्वात् परत्वात् ‘इको यणचि’ इति यणादेशः प्राप्तः। कृते तु यणादेशे एकाच्त्वाभावात् ‘लिटि धातोरनभ्यासस्य’ इति द्वित्वं न स्यात्। अतो ‘द्विवचनेऽचि’ स्थानिवद्भावात् द्वित्वे अभ्यासादिकार्ये चक्रे इति रूपं सिद्धम्। ‘न पदान्त द्विवचन वरेयलोप स्वर सवर्णानुस्वार दीर्घ जश्चर्विधिषु’ इति निषेधविधायकद्वितीयसूत्रम्। प्रस्तुतसूत्रे पूर्वसूत्रद्वयात् ‘स्थानिवदादेशः’ इति ‘अचः परस्मिन्’ इति चानुवर्तते । तेन परनिमित्तकोऽजादेशो न स्थानिवदित्यन्वयः। अपि चात्र विधिशब्दो भावसाधनः कर्मसानश्च। स च प्रत्येकमभिसम्बध्यते इति न्यायात्। तदा पदान्तविधौ द्विवचनविधौ वरेविधौ यलोपविधौ स्वरविधौ सवर्णविधौ अनुस्वारविधौ दीर्घविधौ जश्विधौ चविधौ च परनिमित्तकोऽजादेशो न स्थानिवत्। अतः क्रमशः तेषामुदाहरणं प्रदर्श्यते प्रथमतस्तत्र पदान्तविधिः। पदान्तविधिं प्रति अजादेशो न स्थानिवत्। कौ स्तः इत्युदाहरणम्। अस्ते लटि तसि शपि अदादित्वात् शपो लुकि ‘श्नसोरल्लोपः’ इति परस्थितं सवर्णधातुमाश्रित्य अकारलोपे स्तः इति सिद्धम् । अत्र अलोपः परनिमित्तकः। अतो लोपरपादेशस्य स्थानिवत्वात् ओकारस्य आवादेशे अनिष्टरूपापत्तिर्भवेत्। अतएव पदान्तविधित्वात् स्थानिवन्न। द्विवचनविधिः - द्विवचनविधिं प्रति अजादेशो न स्थानिवत्भवति। दद्ध्यत्र इत्युदाहरणम्। दधि अत्र इत्यावस्थायां ‘इको यणचि’ इति यणादेशो तस्य परनिमित्तकेन स्थानिवत्वात् ‘अनचि च’ इति सूत्रेण द्वित्वं न स्यात्। परन्तु द्विवचनविधित्वात् स्थानिवन्निषेधे द्वित्वे द्ध्यत्र इति सिद्धम्। वरेविधिः। वरच्प्रत्ययविधिं प्रति अजादेशो न स्थानिवत्। ‘अप्सु यायावरः प्रवपेत पिण्डान्’ इत्युदाहरणमत्र। पुनः पुनः याति इति विग्रहे ‘धातोरेकाचो हलादेः क्रियासमभिहारे यङ्’ इति यङि अभ्यासादिकर्मे ‘दीर्घोऽकितः’ इति अभ्यासस्य दीर्घे ‘यश्च यङः’ इति वरचि अनुबन्धलोपे ‘अतो लोपः’ इति अकारलोपे ‘लोपो व्योर्वलि’ इति अकारलोपे प्रथमैकवचने यायावर इति सिद्धम्। अत्र ‘आतो लोप इटि च’ इति अकारलोपेन अनिष्टापत्तिः स्यात्। अतः वरेविधिना स्थानिवत्त्वस्य निषेधात् आलोपो न स्यादिति। यलोपविधिः। यलोपविधिं प्रति अजादेशो न स्थानिवत्भवति। कण्डूतिः इत्युदाहरणम्। कण्डूशब्दात् ‘कण्ड्वादिभ्यो यक्’31 इति यकि तदन्तात् ‘स्त्रियां क्तिन्’ इति क्तिनि अनुबन्धलोपे ‘अतो लोपः’ इति यकारलोपे ‘लोपो व्योर्वलि’ इति यकारलोपे कण्डूयति इति रूपं सिद्धम्। अतो अकारलोपस्य परनिमित्तत्त्वेन स्थनिवत्वात् ‘लोपो व्योर्वलि’ इति यकारलोपो न स्यात्। अतो यलोपविधिना स्थानिवन्निषेधात् यलोपो भवति। स्वरविधिः। स्वरविधिं प्रति अजादेशो न भवति। चिकीर्षकः इत्युदाहरणम्। कृधातोः ‘धातोः कर्मणः समानकर्तृकादिच्छायां वा’ इति सनि अभ्यासादिकर्मे ण्वुलि तत्स्थाने अकादेशे ‘अतो लोपः’ इति अकारलोपे चिकीर्षकः इति सिद्धम्। अत्र अकारलोपस्य परनिमित्तकत्त्वेन स्थनिवद्भावात् ‘लिति प्रत्ययात् पूर्वमुदात्तम्’ इति इकारस्य उदात्तत्वं न स्यात्। अतः स्वरविधिना स्थानिवत्त्वनिषेधादत्र उदात्तत्वं भवति। सवर्णविधिः। सवर्णविधिं प्रति अजादेशो न स्थानिवत्भवति। शिन्ति इत्युदाहरणम्। शिषेः लोटि मध्यम पुरुषैक वचनविवक्षायां ‘रूधादिभ्यः श्नम्’ इति श्नमि सिपः हिकारे हिकारस्य धिकारे ष्टुत्वे जशत्वे ‘श्नसोरल्लोपः’ इति अकारलोपे नकारस्य अनुस्वारे ‘अनुस्वारस्य यवि परस्ववर्णः’ इति परस्ववर्णे शिन्ति इति सिद्धम्। अत्राका-रलोपस्य परनिमित्तकत्वेन स्थानिवत्त्वात् सवर्णविधिः न स्यात्। अतः सवर्णविधिना स्थानिवत् निषिध्यते। अनुस्वारविधिः। अनुस्वारविधिं प्रति न स्थानिवत् स्यात्। शिंषन्ति इत्युदाहरणम्। शिषेः लटि तिपि अन्तादेशो श्नमविकारणे ‘नश्चापदान्तस्य झलि’ इति अनुस्वारे कर्तव्ये ‘श्नसोरल्लोपः’ इति परनिमित्तकत्वादपि न स्थानिवत्। दीर्घविधिः। दीर्घविधिं प्रति अजादेशो न स्थानिवत्भवति। प्रतिदीव्ना इत्युदाहरणम्। प्रतिदिवन् इति प्रातिपदिकस्य ‘भस्य’ इत्यधिकृत्य तृतीयैकवचने प्रतिदिवन् टा इत्यवस्थायाम् ‘अल्लोपोऽनः’इति अकारलोपस्य परनिमित्तकत्त्वेन स्थानिवत्त्वात् ‘हलि च’ इति दीर्घं न स्यात्। परन्तु दीर्घविधिना स्थानिवत्भावाभावात् पुनः दीर्घत्वं भवति । जश्विधिः। जश्विधिं प्रति अजादेशो न स्थानिवत्भवति। सग्धिरित्युदाहरणम्। अदेः क्तिनि यस्लादेशे उपधालोपे धत्वे उपधालोपस्य परनिमित्तकत्त्वेन स्थानिवत्त्वात् ‘झलां जश् झशि’41 इति धकारस्य जश्त्वं न स्यात्। परं जश्त्वविधिना स्थानिवन्निषिध्यते। चर्विधिः। चर्विधिं प्रति अजादेशो न स्थानिवत्भवति। जक्षतुरित्युदाहरणम्। अदेः लिटि तसि अतुसादेशे द्वित्वे घस्लादेशे अभ्यासादिकार्ये ‘गमहनजनखनघसाम्’ इति उपधालोपस्य परनिमित्तकत्त्वेन स्थानिवत्त्वात् ‘खरि च’ इति घकारस्य चर्त्वं न स्यात्, परम् अस्माद् वचनाद् भवति। स्थानिवत्भावस्य निषेधविषये वार्तिकमेकमपि वर्तते। तद्धि ‘पूर्वत्रासिद्धे न स्थानिवत्’। यत्र पूर्वत्रासिद्धनियमस्य विषयो वर्तते तत्र स्थानिवत्भावो न स्यादित्यर्थः। इदानीमपरो निषेधनियमसूत्रमुच्यते। ‘स्थानिवदादेशेऽन लविधौ’ इति सूत्रस्य अनलविधौ इति पदेन स्थानिवत्भावः उक्तः। परन्तु अल्विधौ स्थानिवन्न स्यात्। अत्रालिति प्रत्याहारो वर्णपर्यायो वर्णमात्राश्रितः। अनलिति समुदायाश्रितः। विधीयते इति विधिः नाम कार्यम्। अलाश्रयो विधिरिति उत्तरपदलोपी समासः। न अल्विधिरिति अनल्विधिरिति नञ्समासः। तेन अलाश्रयकार्ये कर्तव्ये स्थानिवन्न भवतीति फलितम्। अत्रोत्तरपदे समासाश्रयणाद् यश्चालि विधिः, यश्चालो विधिः, यश्चालः परस्य विधिः, यश्चाला विधिः सवर्णचासौ अल्पाश्रय इति सर्वत्र प्रतिषेधः सिध्यति। प्रथमतस्तत्र अलि विधिः ‘क इष्टः’ यजेः क्त्वाप्रत्यये सम्प्रसारणे तत्पदं निष्पन्नम्। तेन इकारस्य स्थानिवत्त्वात् सकारस्य ‘हसि च’ इति उत्वं प्राप्तं भवति। परं वचनेनानेन स्थानिवन्निषेधात् तन्न भवति। द्वितीयतः अलो विधिः। ‘द्युकामः’ इत्युदाहरणम्। तृतीयतः अलः परस्य विधिः। द्यौः इत्युदाहरणम्। दिवशब्दात् ‘दिव औत्’ वकारस्थाने औकारे स्थानिवत्भावेन हल्परस्य सकारस्य ‘हल्ङ्याब्भ्यो.....’ इति लोपो न स्यात्। परं वचनेनानेन स्थानिवन्निषेधात् तन्न भवति।

## ब्राह्मणवाङ्मये नानाविधा यागा विस्तरेण वर्णिताः

संस्कृतवाङ्मये महर्षिर्यास्को नैरुक्तरूपेण तथैव समाद्रियते यथाऽष्टाध्यायी-कृद्रूपेण महर्षिः पाणिनिः, रामायणरचयितृरूपेण महर्षिर्वाल्मीकिः, महाभारतकाररूपेण महर्षिर्व्यासो वा। महर्षिणा स्वकीये रचिते निरुक्ते वैदिकशब्दा व्याख्याताः। वैदिकमन्त्राणामर्थज्ञानेन सहैव क्लिष्टशब्दानां निर्वचनस्यापि ज्ञानं निरुक्तेन भवति इति तेनोक्तम्। महर्षिणा स्वीयां पद्धतिमाविष्कृत्य वैदिकशब्दाः समाख्याताः। शब्दा वैदिका वा लौकिका वा सर्वेऽपि भवन्ति धातुजा इति यास्कवचनम्। अतः सर्वे शब्दा अवश्यमेव निर्वचनीयाः। व्याकरणशास्त्रे स्वीकृते प्रकृतिप्रत्ययविभागे महर्षेराग्रहो न वर्तते। वैदिकशब्दानां निर्वचनप्रसङ्गे यास्कस्य मौलिकी प्रतिभा प्रेक्ष्यते। एषा प्रवृत्तिः सविशेषं तदा परिलक्ष्यते यदा वैदिकशब्दानां रूढिगतां व्याख्यामनाहृत्य तेषां निर्वचनं महर्षिरभिनवत्वेन प्रस्तौति।

साक्षात्कृतधर्माणः ऋषयो बभुवुः। ते अवरेभ्यः असाक्षात्कृतधर्मभ्यः उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तः अवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुः। वेदञ्च वेदाङ्गानि च।1 इति यास्कवचनात् ये पूर्व-ऋषयः तपोबलेन समाधौ परमात्मप्रदत्तवेदज्ञानस्य साक्षात्कारं कृतवन्तः ते साक्षात्कृतधर्माणः बभूवुः, ते अवरेभ्यः उत्तरेभ्यः तपोबलहीनेभ्यः इमं ग्रन्थं वेदं वेदाङ्गानि च रचितवन्तः, तथा च पुस्तकरूपेण प्रददुः। एतेन वेदेषु प्रयुक्तस्य एकैकस्य शब्दस्य निर्वचनद्वारा अर्थो निर्दिश्यते। त्रिधा च शब्दा भवन्ति प्रत्यक्षवृत्तिमन्तः परोक्षवृत्तिमन्तः अतिपरोक्षवृत्तिमन्तश्च। प्रत्यक्षवृत्तिमन्तः ते शब्दाः प्रकृतिप्रत्ययानां स्पष्टतया ज्ञानं भवति। येषाञ्च गन्धमात्रेण प्रकृतिप्रत्ययज्ञानं भवति ते परोक्षवृत्तिमन्तः, येषां च किञ्चिन्मात्रमपि न भवति । तेऽतिपरोक्षवृत्तिमन्त शब्दाः। तेषु प्रत्यक्षवृत्तिमताम् शब्दानाम् अर्थज्ञानं व्याकरणादेव सिद्धम्, परं परोक्षातिपरोक्षवृत्तिमतां शब्दानाम् अर्थज्ञानं निरुक्तेन कार्यते। निर्वचनमाध्यमेन तद्यथा निघण्टु इति अतिपरोक्षवृत्तिमान्। निगन्तु इति परोक्षवृत्तिमान् निगमयितारः इति प्रत्यक्षवृत्तिमान् वर्तते। नैघण्टुकम् - नैगम-दैवतकाण्डेषु विभक्तमिदं शास्त्रमविज्ञायैव ये वेदानां, वेदमन्त्राणां अर्थं कुर्वन्ति तेऽनर्थकारिणः वर्तन्ते। तैः अनभिज्ञैः एव अनर्थः प्रतिपादितः। मन्त्रार्थावबोधे निरुक्तस्य तावती आवश्यकता, यथा शरीरे विभिन्नकर्णादि अङ्गानाम्। निरुक्ते प्रथमेऽध्याये तृतीये पादे अध्वर इति शब्दस्य व्याख्यां प्रस्तुवन् महर्षिः कथयति यद् ‘अध्वरः इति यज्ञनाम। ध्वरतिर् हिंसाकर्मा, तत्प्रतिषेधः।’ हिंसार्थकः ध्वृ इति धातोः स प्रतिषेधकः। एवं स एवाध्वरो नाम यत्र हिंसा वधो वा प्रतिषिध्यते। सामान्येनाध्वरशब्दो यज्ञवाचकः। यज्ञस्य च प्रायेण स एव रूढोऽर्थो गृह्यते यो ब्राह्मणयुगे प्रचलित आसीत्। एवंविधोऽर्थस्तु यास्केनास्वीकृतः। नूतने सन्दर्भे च तस्य नवीनं व्याख्यानमुपस्थापितम्। यज्ञ इति शब्दस्तु पुरुषसूक्तेऽपि विद्यते। तत्रापि स शब्दो हिंसा नावबोधयति। यज्ञशब्देन तत्र पूजा पवित्रं कर्म वा परिलक्ष्यते। ऋषिणा तस्मिन् सूक्ते मानस्या संकल्पनया सृष्टियज्ञस्य स्वरूपं परिकल्पितं यस्माद् विविधानां जागतिकपदार्थानामुत्पत्तिः प्रदर्शिता। तत्र लौकिकयज्ञस्य स्थाने ‘आध्यात्मिको यज्ञः’ प्रतिष्ठापितः। ब्राह्मणवाङ्मये नानाविधा यागा विस्तरेण वर्णिताः। यागानां वर्णनं यद्रूपेण ब्राह्मणग्रन्थेषुप्राप्यते, आरण्यकवाङ्मये तस्माद्विरक्तिः सञ्जायते। तत्र यज्ञियं कर्मकाण्डं विहाय ज्ञानोन्मुखी प्रवृत्तिर्दर्शनपथमायाति। बृहदारण्यकोपनिषदि अश्वमेधयज्ञस्य फलप्राप्त्यर्थं तस्य यज्ञस्य प्रत्यक्षतो विधानं नादिश्यते, परमश्वमेधस्याश्वरूपेण उषा आराधनीयेति निर्दिश्यते। तथैव सूर्यस्तस्य नेत्ररूपेण वायुश्च प्राणरूपेणाराध्यः। उषा वा अश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षुर्वातः प्राणः।11 आरण्यकेषु परिलक्षितायाः प्रवृत्तेः पराकाष्ठोपनिषद्वाङ्मये प्रेक्ष्यते यत्र ज्ञानमेव मोक्ष साधन मित्यङ्गीकृतम्। महर्षेर्यास्कस्य समयः सप्तमी शताब्दी ईशुपूर्वमिति विद्वद्भिः स्वीक्रियते। अस्मिन्देशे कालोऽय-मुपनिषदां चिन्तनधारया प्रभावितः प्रतीयते। अतो नेदमाश्चर्यं यद् यास्कस्य व्याख्यापद्धतिः आरण्य कानामुप निषदां च चिन्तनेन प्रभाविता स्यात्। महर्षिरध्वर इति शब्दस्य तु ‘हिंसाविहीनो यज्ञ’ इत्यर्थं प्रतिपादयत्येव। अध्वर्युशब्देनापि अयमेवार्थो ध्वन्यते, यत्र ‘अध्वरस्य’ अर्थात् हिंसाविहीनयज्ञस्य नेता प्रवर्तकः अध्वर्युरिति स स्वीकरोति। निरुक्ते तृतीयेऽध्याये यास्केन यज्ञशब्दस्य विविधा अर्था उपस्थापिताः। किन्तु तत्र न क्वापि हिंसा वधो वा निर्दिश्यते। तस्मिन् समयेऽध्वरशब्दस्येदृश्या व्याख्यया महर्षेर्यास्कस्य चिन्तनस्वातन्त्र्यं सूच्यते। यज्ञस्य प्रचलितमर्थं प्रति यास्कस्याग्रहो न प्रतिभाति। यज्ञशब्दस्य स रूढोऽर्थो भारतवर्षस्य यज्ञियसंस्कृतौ कथमपि भ्रमवशात् प्रविष्ट इति प्रतीयते। यजेरर्थः कोशेषु यजनं त्यागपूर्वकं पू-जनं वेति लभ्यते। सम्यग् दीक्षितो यजमानः (याज्ञिकः) सर्वानपि दोषान् परित्यज्य यज्ञकार्येषु प्रवर्तेतेति तत्रापेक्ष्यते स्म। एवं यजमानेन अन्तर्निष्ठं पशुत्वं परित्यक्तव्यमित्यनेन सूच्यते। स्यादिदं यत्तस्मिन् युगे महनीये तथ्येऽस्मिन् निहितं मूलभावं विहाय रूढोऽर्थ एव गृहीतः। ततः प्रभृत्यान्तरिकपशुत्वस्य स्थाने बाह्यपशोरेव बलिः प्रारब्धः। अस्या बलिप्रवृत्तेर्विरोध आरण्यकवाङ्मये दृश्यते। उपनिषत्सु बलेर्हिंसाया वा न किमपि स्थानमस्ति। एषैव प्रवृत्तिः श्रमणसंस्कृतावपि परिलक्ष्यते। महर्षेर्यास्कस्य ‘अध्वरः’, ‘अध्वर्युः’, ‘यज्ञः’ चेत्येतेषां शब्दानां व्याख्याने एतदेव निर्दिष्टं वर्तते। एवमन्येषामपि शब्दानां निर्वचने यास्कस्य विचारस्वातन्त्र्यं मौलिकत्वञ्च वीक्ष्येते। व्यापकः खलु तस्य व्याख्येयशब्दानां परिधिः। विविधक्षेत्रेषु प्रयुज्यमानाः शब्दास्तत्र वर्तन्ते। परं स्वीयास्ति नूनं यास्कस्य निर्वचनसरणी सर्वत्र। धातोरेव प्राधान्यमिति यास्कनिर्वचनस्य वैशिष्टयम्। ऋषिशब्दविषयेऽपि निरुक्तकारस्य स्वकीयाऽवधारणा। यो मन्त्रद्रष्टा स ऋषिरिति मन्यते यास्कः। ऋषिः सूक्ष्मान्तर्दृष्ट्या मन्त्राणां गूढार्थं जानाति। अनया व्याख्यया ‘ऋषिशब्दस्य’ महनीयता व्यज्यते। ऋषिशब्दस्येयं व्याख्या तच्छब्दगताद् बाह्याडम्बरान्मुक्ता। एवं निरुक्तकारेण ऋषिशब्दस्य व्याख्यानं प्रचलितार्थं विहाय विहितम्। यास्कमतेन स एवाचार्यो यः स्वयमाचारपूतः सन् छात्रानाचारं शिक्षयति। आचार्यः स्वयं विद्यावान् सन् छात्रेभ्यः सूक्ष्मतरान् तत्त्वानुपदिशति। एवं स छात्राणां ज्ञानमभिवर्धयति। नूनमध्यापकविषये महर्षेरिदं सम्यगुदात्त-मुत्तमं च चित्तनं वर्तते।

## स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विज्ञानाति योऽर्थम्

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विज्ञानाति योऽर्थम्।**
**योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥**

एवं यास्काचार्यो विधिवदर्जितज्ञानं तु प्रकृष्टं प्रशंसति परमल्पं ज्ञानमज्ञानं वा निन्दितुं न हि विशंकते। मनुष्यविषयिणी महर्षेः स्वकीयाऽवधारणा। महर्षिमतेन स एव मनुष्यसंज्ञां धारयितुमर्हति यः सम्यक् मननेन सुपरीक्ष्याचरति। ‘मनुष्याः कस्मात्? मत्वा कार्याणि सीव्यन्ति।14 इत्यनेनैव स्वीयेनाचारेण मानवः आत्मानं पशुभ्यः पृथक् करोति। अन्यथा को भेदो नृपश्वोः? निरुक्तस्य चतुर्थेऽध्याये प्रथमे पादे मनुष्यवाची मर्यशब्दो विद्यते। मर्यो मर्यादामनतिक्रम्याचरतीति तस्य शब्दस्यार्थः। एवं मनुष्यविषयका महर्षेर्धारणोदात्ता। यास्कस्य दृष्ट्या स एव मनुष्यो नाम यः सुविचार्य मर्यादामनतिक्रम्याचरति। नरस्येदमाचरितमेवान्येभ्यः प्राणिभ्यस्तस्य पृथक् सत्तां स्थापयति।

निरुक्तकारः सामान्यतः पशुनामधेयं प्राणिनं पशुं न मन्यते। स तमेव पशुं गणयति यो भवत्याचारभ्रष्टः। तस्य मतेन स एव पशुः, यो लुब्धः स्वधर्मच्युतो वा। एवं यास्कस्याचारविषयिणी उदात्तऽवधारणाऽभिव्यज्यते। लुब्धता स्वधर्मच्युतिर्वा विगर्हणीया। लुब्धः स्वधर्मभ्रष्टो वा नूनं पशुकोटिं भजते। एवं यास्कस्य चिन्तने मौलिकत्वं वर्तते। एवमेव नरकमधर्मं च प्रत्यपि महर्षेमौलिकी परिकल्पना। यास्कस्य मतेन नरकशब्दः स्वर्गशब्दो वा न खलु कश्चित्प्रदेशवाचको यथा लोके मन्यते। न च स्वर्गो नरकं वा कश्चित्प्रदेशविशेषो यो मरणानन्तरं प्राप्यते। महर्षेर्दृष्ट्या नरकं त्वपवित्राचरणस्य परिणामो यज्जीवितदशायामेव लभ्यते। निरुक्ते प्रथमेऽध्याये निपातसमाहारप्रकरणे नरकशब्दस्य निर्वचने यास्कमुनिना लिखितं यत्तदेव नरकं नाम यत्र नरोऽधोगतिं प्राप्नोति। नरकं न्यरकं नीचैगमनमिति तद्वचनम्। तस्यां दशायां स न किञ्चिदपि सुखमनुभवति। नरकशब्दस्यानया व्याख्यया महर्षिणा धारणान्तरमनादृत्याचरणमेव मूलमिति स्थापितम्। पूताचरणस्यैवाभावे ‘नरकस्य’ अर्थात् ‘अधोगमनस्य’ प्रसंगः स्यात्। एवमेवाधर्मशब्दस्य व्याख्यापि महर्षिणा मौलिक्या दृष्टया प्रस्तुता। अधर्मशब्दस्य सामान्यतः प्रचलितां व्याख्यामस्वीकृत्य निरुक्तकारो मर्यादाया उल्लंघनमेवाधर्म इति कथयति। निरुक्ते द्वितीयेऽध्याये समुद्रशब्दस्य निर्वचनप्रसङ्ग आख्यानमेकं महर्षिर्ब्रवीति यज्ज्येष्ठे भातरि जीवति सति, नाभिषेकाधिकारोऽनुजस्य। परं यदि कोऽप्येवमाचरति, तर्हि तस्येदमाचरितं मर्यादाप्रतिकूलं वर्तते। अयमाचार एवाधर्मः। एवं स्पष्टमिदं यदधर्मं प्रत्यपि महर्षेः स्वकीयो विमर्शो विद्यते, यत्र मर्यादातिक्रमस्य निन्दा, मर्यादिताचरणस्य च प्रशंसा ध्वन्यते। हिंसाया वाऽहिंसया वा तत्र न कापि वार्ता।

### *साम्प्रतिकी बहवपत्यता महती समस्या खलु*

*साम्प्रतिकी बहवपत्यता महती समस्या खलु। परं प्राचीनग्रन्थेष्वपि एतां प्रति सावधानेन वर्तितव्यमिति संकेतो वर्तते। ईशुपूर्वं सप्तम्यां शताब्द्यां यास्केन बह्वपत्यता निन्दिता। निरुक्ते प्रथमाध्यायस्य तृतीये पादे ‘कम्’ इत्यस्य पदपूरणनिपातस्य व्याख्यां प्रस्तुवता महर्षिणा लिखितं यद् वह्वपत्यवन्तो वस्त्रविहीना जनाः शीतकाले सीदन्ति।*

***निष्ट्वक्तासश्चिदिन्नरो भूरितोका वृकादिव ।***
***बिभ्यस्यन्तो ववाशिरे शिशरं जीवनाय कम् ॥***

*बह्वपत्यायाः खल्वेषः दुःखदपरिणामोऽत्र सुतरामभिव्यज्यते। इयमेवाभिव्यञ्जना निरुक्तेऽन्यत्रापि प्राप्यते। महती खलु महर्षेर्दूरदर्शिता। निरुक्ते एवंविधानि बहूनि खलु निदर्शनानि यैनिर्वचनक्षेत्रे महर्षियास्कस्य मौलिकी दृष्टिः परिलक्ष्यते। महर्षियास्को खलु स्वतन्त्रविचारकः प्रगल्भो व्याख्याता च आसीत्।*

## यस्य मत्याम् ‘विहस्य’ इति पदं षष्ठीविभक्तेः

‘वेदोऽखिलोधर्ममूलम्।’ विश्वसाहित्ये वेदानां प्राचीनता सर्वमान्यम् तथा च प्रामाणिकम् जायते। अतः भारतीयपरम्परायां प्रत्येकविषयस्यसम्बन्धवेदेष्वेव अन्वेष्यते। अस्य हेतुत्वात् व्याकरणशास्त्रस्यादिमस्त्रोतऽन्वेष्णार्थं वेदानामभिमुखं करणीयमिति विद्विद्भिः सर्वदा स्वीक्रियन्ते। वेदाङ्गानामकरणेनेवस्पष्टं भवति यत् वेदानाम् संहितारूपेषु निबद्धत्वात् षट् (शिक्षा-कल्प-व्याकरण-निरुक्त-छन्द-ज्योा-तिष) अङ्गानाम् पृथक्रूपेणगणना बभूवुः। वैदिकचिन्तनेन साकम् अर्थानुसन्धानाय शब्दविश्लेषणस्याविर्भावः स्वाभाविको आसीत्। एतत् विश्लेषणहेतुत्वात् अस्य नामव्याकरणमित्यवगम्यते। षड् वेदाङ्गेष्वस्यप्रधानता सर्वशास्त्रेष्वेकमतेन मन्यन्ते। ‘मुखं व्याकरणं स्मृतम्।’ इतिपाणिनीयशिक्षायाम्। आचार्यभर्तृहरिः स्वग्रन्थवाक्यपदीये व्याकरणशास्त्रं सर्वोपरिः मन्यप्रतिपादयति यत् ‘प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः।’ संस्कृतभाषायाम् व्याकरणस्यप्रक्रियाऽतिप्राचीना वर्तते। संस्कृतभाषायाः शुद्धस्वरूपज्ञानाय संस्कृतव्याकरणशास्त्रस्याध्ययनं क्रियते। एवमेवविशेषताहेतुत्वात् एषः वेदस्यसर्वप्रमुखऽङ्गं मन्यते। व्याकरणशास्त्रस्यमहत्त्वम् प्रतिपाद्यर्थं एको श्लोको अतिप्रसिद्धः -

**यस्य षष्ठी चतुर्थी च, विहस्य च विहाय च।**
**यस्याहं द्वितीया स्यात्, द्वितीया स्यामहं कथम्॥**

कथमहं तस्य द्वितीया (भार्या) भवितास्मि। यस्य मत्याम् ‘विहस्य’ इति पदं षष्ठीविभक्तेः, ‘विहाय’ इति पदं चतुर्थीविभक्तेः तथा अहम्कथञ्च द्वितीयाविभक्तेः स्थापितोऽस्ति। अत्र ध्यातव्यम् यत् ‘विहस्य’ पदान्ते ‘स्य’ इति प्रयोगहेतुत्वात् षष्ठीविभक्तेर्न, एवमेव ‘विहाय’ पदान्ते ‘आय’ इति हेतुत्वात् चतुर्थीविभक्तेर्न। एवमेवऽहम्कथञ्चपदान्तयोः मकारवर्णस्यप्रयोगेन द्वितीयायार्नऽवगम्यते। ‘अहमाद्यवर्णैकवचनप्रथमायाः रूपमस्ति’ शास्त्रस्य एतद् सामान्यसिद्धान्तं यो न जानाति स नितान्तमूर्खोऽस्ति। व्याकरणवेत्तामानवः प्रत्ययविभक्त्य च विषयमार्मिकदृष्टिं अवधारयते। सः जानाति यत् ‘विहस्य’ तथा च ‘विहाय’ इत्यव्ययपदम् भवति। एते विभक्तिपदयोरूर्पौ न स्तः। अतः वयमुपहासपात्रं न भवेम तदर्थं व्याकरणशास्त्रस्य ज्ञानमत्यावश्यकं वर्तते। येन शास्त्रेण शब्दज्ञानं भवति तद् शास्त्रं नाम व्याकरणशास्त्रम्। अस्येव अपरनाम शब्दानुशासनम्। व्याकरणं आङ्ग्लभाषायां ‘ग्रामर’ इत्युच्यते। व्याकरणस्य यावत् सूक्ष्मविवेचनं संस्कृतभाषायां कृतम् तावत् क्वापि अन्यभाषायां नोपलब्धयते। वेदस्य षङ्गेषु व्याकरणमुखमस्ति यः मानवशरीरस्य सर्वप्रमुखाङ्गमस्ति। प्रामाणिकदृष्ट्या वक्तुं शक्यते यत् अनेन शास्त्रेण विना अन्यशास्त्रणां साहि-त्यज्योतिषित्यादिशास्त्राणां ज्ञानं नितान्तऽसम्भवम्। उक्त च -

यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्।
स्वजनो श्वजनो माऽभूत् सकलं शकलं सकृच्छकृत्।।

व्याकरणस्य ज्ञानं विना शब्दानां सम्यग्प्रयोगो न भवति। तस्मादेव कारणात् अर्थस्य अनर्थं भविष्यति।

## व्याकरणमवेत्ता ‘भवति’ इति क्रियापदं ‘भवतीति’

प्रामाणिकतया वक्तुं शक्यते यत् शब्दार्थयोः विश्लेषणस्येकमात्रं साधनं व्याकरणमस्ति। प्रकृतेः मूलज्ञानं विना ज्ञानस्य प्राप्ति नितान्तसम्भवम्। व्याकरणस्य वैशिष्ट्यमेवमेव यत् शब्दे या भावना व्यक्ता तस्या प्रतिपादनं कर्तुं समर्थोऽस्ति। मीमांसकाचार्याः भावनायाः भेदेषु अस्य सिद्धान्तस्य व्यापक निरूपणमपि क्रियते। केनचिदपि भाषायाम् भाषां अनुशासितसुनियोजिताय च पूर्णदायित्वं व्याकरणशास्त्रेण निर्वह्यते। अस्मात् हेतुत्त्वात् सर्वेभाषावेत्तारः निजशास्त्रेषु व्याकरणं प्रमुखतया प्रतिपादितम्। भाषायाः अङ्गप्रत्यङ्गस्य विवेचनमेवव्याकरणमुच्यते। व्याकरणं तद् विधानामस्ति येन भाषायाः शुद्धोच्चारणम् शुद्धपठनम् तथा च शुद्धलेखनम् समागम्यते। भाषायाः पठनलेखनोच्चारणेभ्यः निर्धारितनियमाः सन्ति। तेभ्यः नियमेभ्यः परिपालनमत्यावश्यकम्। एते नियमाः व्याकरणान्तर्गते आयाति। अतः भाषायाः अध्ययनार्थं व्याकरणाध्ययनमतीव महत्त्वपूर्णमस्ति। भाषायाम् प्रयुक्तशब्देषु प्रकृतिप्रत्यययोः विशद् विश्लेषणमेव व्याकरणम्। व्याकरणं स्वदेशेन भाषां न प्रवृत्तयते अपितु एतत् तु प्रत्युत्तभाषायाः स्थितेः स्पष्ट्यते। यथा ‘भवति’ क्रिया-पदमस्ति। व्याकरणमवेत्ता ‘भवति’ इति क्रियापदं ‘भवतीति’ इत्यस्मिनर्थे गृह्णाति परञ्च व्याकरणवेत्ताऽत्र जानाति यत् का प्रकृतिः कः प्रत्ययः अर्थात् उभयोः स्थितेः किम्? व्याकरणं स्पष्ट्यति यदत्र ‘भू’ प्रकृतिः तथा च ‘तिप्’ प्रत्ययोऽस्ति। तदनन्तरं व्याकरणमेव लोचयति यत् कथं भूधातोः सार्वधातुकसंज्ञा तदुपरान्तगुणादेशः तथा च केनप्रकारेण तिपादीनां प्रत्ययानामुत्पत्तिर्भवति। एवमेवेतद् विश्लेषणमतीवमहत्त्वपूर्णं जायते। अतोक्तं विद्विद्भिः यत् विश्लेषणम् व्याकरणस्यपरममहत्त्वम्।

# अमृतवाणी गीतातत्वार्थ बोधः

**वैराग्याद्रसनिवृत्तिः**
**स्थितप्रज्ञस्य देहिनः।**
**निराहारस्य जीवस्य**
**रसासक्तिर्न नश्यति**

शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

यस्य पुरुषस्य स्वभावत एव विषयेषु रागः न स्यात् असावेव वैरागी कथ्यते। तस्य वैरागिणः साधनावस्थायामेव रसनिवृत्तिः भवति। परञ्च विषयवैराग्यं विनैव ये निराहारिणःपुरुषाः विचारपूर्वकं साधनासिद्धौ संलग्नाः सन्ति तेषां विषयत्यागे कृतेऽपि रसबुद्धेः निवृत्तिर्न भवति। स स्थितप्रज्ञः परमात्मनःआनन्दमनुभूय क्षिप्रमेव रसनिवृत्तः भवति।तस्मिन् रसबुद्धेरभावः दृश्यते।एतादृशःपुरुष एव परमहंस इवाचरति। अत्र रसोप्यस्य पदेनेदं रहस्यात्मकं तथ्यम् समुत्पद्यते यत्-- साधकस्य अहंभावे एव रसबुद्धिः तिष्ठति,रसो रागृआसक्तिः कथ्यते। अन्वय शब्दार्थः -

**श्लोसंकेतः-** विषयाविनिवर्तन्ते-परं दृष्ट्वा निवर्तते। गीता 2/59 निराहारस्य,रूप,रस,गन्ध, स्पर्श, और शब्द इन विषयों से जिनकी चक्षु आदि इन्द्रियाँ संयत ( विमुख) हो गयी हैं ऐसे ,देहिनृजीवात्मा के ,रसवर्जमृविषयभोग की आसक्ति को छोड़कर, विषयाःृइन्द्रियों के विषय रूपादि,विनिवर्तन्ते,निवृत्त हो जाते हैं, किन्तु विषय भोग की वसना निवृत्त नहीं होती है, अस्यृविषयविमुख जीवात्मा का, रसोत्रपिृविषयभोग की लालसाृ आसक्ति भी परमृ (रूपादि विषयों के भोग से प्राप्त होने वाले सुख की अपेक्षा उत्कृष्ट) आत्मस्वरूप का,दृष्ट्वा,दर्शन कर,निवर्तते,निवृत्त हो जाती है।

**तत्त्वार्थः-** रूप,रस,गन्ध, स्पर्श,और शब्द इन्द्रियजन्य पाँच विषयों से जिनकी चक्षु आदि इन्द्रियों संयतृविमुख हो गयी हैं, ऐसे जीवात्मा के रूपरसादि विषय-भोग की वसना को छोड़कर शेष रूपादि विषय निवृत्त हो जाते हैं, किन्तु विषय-भोग की वासना निवृत्त नहीं होती है। विषय- विमुख जीवात्मा को विषय-भोग की वासना की तभी निवृत्त होती है जब आत्मस्वरूप का साक्षात्कार होता है।

**रहस्यात्मक- तथ्य -** ईश्वर ने जीव को दश इन्द्रियों का स्वामी बना कर पृथ्वी पर भेजा है । जिनमें पाँच ज्ञानेन्द्रियाँ और पाँच कर्मेन्द्रियाँ कहलाती हैं । जिन इन्द्रियों से विषय का ज्ञान होता है, वह ज्ञानेन्द्रियाँ कहलाती हैं और जिन इन्द्रियों से कर्म किया जाता है वह कर्मेन्द्रियाँ कहलाती हैं। हमारी ज्ञानेन्द्रियाँ मन के सहयोग से अपने- अपने विषयों का उपभोग करती हैं। जिस प्रकार एकादशी आदि व्रत के उपवास में अन्न से इन्द्रियों को हटा लेने पर भी अन्न के प्रति जो आसक्ति है वह अन्दर में बनी ही रह जाती है तथा उपवास से उपरत होते ही अन्न रूप आहार को प्राप्त करने की लालसा जागृत हो उठती है, वह तबतक शान्त नहीं होती जब तक अन्न का ग्रास ग्रहण नहीं हो जाता। ठीक इसी प्रकार इन्द्रियों को विषय से हटा लेने पर भी विषयासक्ति बनी रहती है। आत्मस्वरूप के दर्शन के पश्चात विषयासक्ति से निवृत्ति हो जाती है।आत्मदर्शन से जो अलौकिक सुख का आनंद मिलता है वह विषयासक्ति में नहीं मिलता।

# ॥ गीताज्ञानपीयूषामृतम् ॥

गीताज्ञान संचरण समितिः, पटना, बिहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः

पीयूषम्, सोऽमृतत्वाय कल्पते। गीतायाः विषयः सर्वत्र व्यापकतया आत्मा,परमात्मा।।सर्वाः चर्चाः तमेवाश्रित्य भगवता क्रियन्ते। इत्यवधेयं सर्वैः। तत्र काल्पनिकस्य स्थानं तिलमात्रमपि नास्ति। यः पुरुषः इन्द्रियेण इन्द्रियविषयवेगेन न कदापि पीडितः व्यथितः व्यग्रश्च भवति ,तथा च अनुकूलेषु प्रतिकूलेषु च स्वात्मस्वरुपसुस्थिरः तस्य 'आत्मामृत्वं ' जागृतं भवति। सुखीभवनं दुःखीभवनञ्च सुख-दुःखयोः भोगः। भोगी जनः कदापि सुखी न भवति। । तेन साधकैः सुख-दुःखभोगः न कर्तव्यः। प्रत्युत तयोः सदुपयोगः कर्तव्यः।। प्रारब्धपरिस्थितिं मत्वा सदुपयोगेन कर्मफलक्षयो भविष्यति। ।अयमेव पुरुषार्थः। तेनानेन पुरुषार्थेन आत्मामृतत्वं जागृतं भवति। सुखस्य सदुपयोगः परेभ्यो सुखदानं परेषां सेवा च। दुःखस्य सदुपयोगः सुखेच्छात्यागः। इत्येवं रूपेण बोधव्यं। दुःखस्य कारणं सुखेच्छा। यथा गीतायामेव 'ये हि संस्पर्शजा भोगा दुःखयोनय एव च' भोगः पतनस्य कारणं भवति। तेन इन्द्रियाणां न कदापि तृप्तिः भवति। अतः सदुपयोगपूर्वकं हरिसम्बन्धेन जीवनयापनेन आत्मामृतत्वं स्वयमेव आयास्यति।

# न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते अनुविद्धमिव ज्ञानं सर्वं शब्देन भाषते

अन्येषां जनानां प्रतिपत्तिर्हि शब्दप्रयोगस्य मुख्यं प्रयोजनम्। स्वात्मस्थान् विचारान् अन्यान् प्रति बोधयितुं वक्ता शब्दान् उपादत्ते। वक्त्रा शब्दे उच्चारिते सति उच्चरितः शब्दः अन्यसमवेतं बोधं न जनयति चेत् शब्दप्रयोगस्य वैयर्थ्यं विदितमेव विदुषाम्। किञ्च जगति यावानपि लौकिकः पारलौकिको वा व्यवहारो अनुभवविषयः स सर्वोऽपि प्राधान्येन शब्दाधारित एव भवति।व्यवहारसमर्थचेष्टादिकमपि वस्तुतः शब्देष्वेव अन्तर्भवति। वयं हि तादृशचेष्टया तदर्थबोधकान् शब्दान् अनुमाय तदनुसारं प्रवर्तामहे। चेष्टाशब्दयोरस्ति कश्चन अव्यभिचारसम्बन्धः। अत एव यदा चेष्टया प्रतिपादयिषितो अर्थो नावबुध्यते तदा शब्दा उपादीयन्ते। यत्र च प्रयुक्तैः शब्दैरर्थो नावगम्यते तत्र चेष्टया बोध्यते। वस्तुतः जगति नहि कोऽपि तादृशः प्रत्ययः वर्तते यः शब्दानुगमादृते स्यात्। तदुक्तमाचार्येण भर्तृहरिणा -
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भाषते।।1
अत एव असङ्गात्मन इच्छन्तो योगिनः बाह्यजगतो मन आकृष्य निश्चेष्टा मौनमालम्बन्ते। दिव्यदृष्टयो हि ते योगदृशा सकलं अतीतानागतादिप्रपञ्चं किम्बहुना परमात्मस्वरूपमपि च साक्षात्कृत्य तत्तद्वस्तुस्वरूपं परिचायितुं काञ्चन शब्दान् शब्दसमूहात्मकानि वाक्यानि वा प्रयुञ्जते। तानि वाक्यानि तत्तत्पदार्थानुगतधर्मबोधकत्वात् लक्षणानि इति उच्यन्ते, यदाधारेण वयं वस्तुनः यथार्थस्वरूपं परिचिनुमः। अत एव वयं लक्षणैकचक्षुष्काः वर्तामहे। ते योगिनः तपस्विनः ऋषयः लक्ष्यस्वरूपसाक्षात्कर्तृत्वात् लक्ष्यैकचक्षुष्काः भवन्ति। 'लक्षणं हि लक्ष्यम् अभिव्याप्य भवेत्' इति नियमः किन्तु तन्नातिव्याप्नुयात् लक्ष्यम् इति तु आवश्यकमेव। अत एव लक्षणकरणात् प्राक् यावल्लक्ष्य स्वरूपज्ञानम् अपेक्षितं, परिमितमतीनाम् अस्माकं तन्न सम्भवति, लक्ष्याणाम् अनन्तत्वात् विप्रकृष्टत्वाच्च। अस्माभिस्तु पुरतः इच्छितानि कानिचन लक्ष्याणि साक्षात्कृत्य तत्सदृशेन अन्यान्यपि सम्भाव्य तदनुगततया लक्षणानि क्रियन्ते। अत एव तत्र अव्याप्त्यतिव्याप्त्यादिदोषाः अपि सम्भाव्यन्ते। तन्निवृत्तये च तत्र परिष्काराः क्रियन्ते। पुनस्तत्र दोषशङ्कायां जातायां सत्यां परिष्कारान्तरम्, इत्येवं रीत्या वस्तुनो निकृष्टं स्वरूपं उपलक्ष्यते। परिष्काराणाम् इयं पद्धातिः ऋषिपरम्परात एव अस्माकं संस्कृतसाहित्ये वरिवर्ति । अत एव भगवता पाणिनिना सूत्रं व्यरचि, तस्मिन् सूत्रे अव्याप्त्यतिव्याप्त्यादिदोषसम्भावनायां सत्यां वार्तिककृता वार्तिकानि निगदितानि। तद्यथा 'येन विधिस्तदन्तस्य' इति तदन्तविधायकं सूत्रं भगवता पाणिनिना विरचितं किन्तु समासप्रत्ययविधौ तदन्तविधिः नापेक्षते। अतः तत्र वार्तिककृता 'उगितवर्णग्रहणवर्ज्यम्' इति वार्तिकाभ्यां तदन्तविधिविधायकं 'येन विधिस्तदन्तस्य' इति सूत्रं नियन्त्रितम्। अतः ऋषिपरम्परात एव परिष्काराणाम् अस्माकं पद्धतिः वर्तते इति निश्चप्रचम्। अस्याः परिष्कारपद्धतेः सम्पूर्णेऽपि विश्वे अत्युत्तमम् अवदानम् अस्ति। अस्माकम् आचार्यैः तादृशीयं पद्धतिराविष्कृता, यया विषये परिशील्यमाने मनागपि अर्थसन्देहो न भवति, किन्तु लक्ष्याणां यावत्स्वरूपज्ञानार्थं यल्लक्षणं वर्तते ।

गंगाविचार मंच नमामिगंगे, नगर निगमः प्रयागराजे एवं च क्षेत्रीय गंगासमितेः एतेषां संयुक्ते तत्वावधाने बड़ी कोठी दारागंजे एका संगोष्ठी समायोजिता। अवसरेऽस्मिन् वर्षा जल सरंक्षणस्य संकल्पः प्रदत्तः ।

# 'ब्राह्मणनेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'

शिष्यतेऽनेनेति शास्धातोः 'सर्वधातुभ्यष्ट्रन्' इति ष्ट्रनि निष्पन्नः शास्त्रशब्दो निदेशार्थकस्य ग्रन्थरूपस्य वा वाचकः। तच्च शास्त्रं मनुजनूनां सन्मार्गनिर्देशकम्। जगत्यस्मिन् उपलब्धेषु बहुविधेषु शास्त्रेषु वेदशास्त्रं हि अन्यतमं सर्वविधज्ञानप्रतिपादितत्वात्। वेद्यतेऽनेनेति ज्ञानार्थकाद् विद्धातोरचि वेदशब्दो निष्पन्नः। स चोपचाराद् ग्रन्थशब्दस्यापि वाचको भवति। वेदार्थानुशीलनेन ज्ञायते यद् वेदा हि विविधज्ञानविज्ञानराशयः संस्कृतेराधाररूपाः कर्तव्यबोधकाः शुभाशुभनिर्देशकाः विश्वहितसम्पादिकाः चतुर्वर्गावाप्ति-सोपानस्वरूपाश्च सन्ति। अतएव अखिलज्ञानराशिर्हि वेदः इति वक्तुं शक्यते। तथाहि 'सर्वज्ञानमयो हि सः' इति भणता मनुना वेदानां सर्वविधज्ञाननिदानमुररीकृतम्। परं तदर्थाबोधो दुरूहः। अतः तज्ज्ञान पीयूष पयोधारा वगाहनं वेदाङ्गव्यतिरेकेण अन्येन केनाप्युपायान्तरेण न कर्तुं शक्यते। तस्मात् शास्त्रेषु अध्ययनविधिरेव विधीयते। विषयेऽस्मिन् महाभाष्यकारस्य भाष्यवचनमनुसन्धेयम् - 'ब्राह्मणनेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'1 इति। अतएव वेदानां साधुज्ञानार्थं षण्णां वेदानां ज्ञानमावश्यकम्। यद्यप्यद्यत्वे कातन्त्रमुग्धबोधसारस्वताभिधानानि विविधानि व्याकरणान्युपलभ्यन्ते तथापि सर्वेषां न वेदाङ्गत्वम्। निखिललौकिकशब्दानां व्युत्पादकतया पानिणीयव्याकरणमेव सर्वेषां मूर्धन्यं धन्यं च सद् वेदाङ्गतामाधत्ते। तच्च पाणिनीयं शास्त्रं सूत्रजालावद्धम्। अर्थान् सूते सूचयति वेति सूत्रमिति। पाणिनीये शब्दशास्त्रे -

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥**

इत्यादिना यत् षड्विधं सूत्रलक्षणं निगदितं तेषु अतिदेशसूत्रं ह्यन्यतमम्। अतिदेशो नामापरसामान्यत्रारोपः। वैयाकरणैः अतिदेशलक्षणमेवमुक्तं - 'साक्षात्सादृश्यग्राहक-शास्त्रत्वमतिदेशसूत्रत्वम्' इति। अतएव कस्यचित् स्थानस्य निमित्तार्थं प्रणीतकार्यद्वारा अन्यत्र प्राप्तिर्हि अतिदेशः। यथा 'अक्षय्योदकदानं तु अर्घ्यदानवदिष्यते' इत्यत्रार्घ्यदानवद् अक्षय्योदकदानस्य पृथग्दानरूपधर्मस्यातिदेशो भवति। अतिदेशसूत्रं प्रायशः वदिवादिशब्दद्वारा निरूपितम्। वैदिककर्मवत् लौकिककर्मणि तथा मीमांसाशास्त्रवद् व्याकरणशास्त्रेऽपि अतिदेशस्य प्रयोगः प्रसिद्धः। यथा लोके तावदेकस्मिन् उपाध्याये मृते तत्स्थाननिविष्टस्यापि अभिवादनाद्युपाध्यायधर्मलाभो भवति, एकस्मिन् च राजनि प्रोषिते तत्स्थाने अभिषिक्तस्य तत्पुत्रादेरपि तद्धर्मलाभो भवति। वेदेऽपि ब्रीहिस्थानपतिता नीवारादयोऽवघातादीन् ब्रीहिधर्मान् लभन्ते। पाणिनीयव्याकरणे उपलब्धेषु अतिदेशसूत्रेषु 'स्थानिवदादेशोऽनलविधौ'4 इति प्रधानं मूर्धन्यञ्चातिदेशसूत्रम्। प्रस्तुतसूत्रेणैवादौ पाणिनिना स्थानिवद्भावः प्रदर्शितः। ननु को नाम स्थानिवद्भावः इति जिज्ञासा स्वत एव समुदेति। स्थानं नाम प्रसङ्ग इति। स्थानमस्यास्तीति स्थानशब्दाद् मत्त्वर्थीये णिनिप्रत्यये स्थानिशब्दो निष्पन्नः। स्थानिलक्षणं निगदितं बालमनोरमाख्यटीकायां वासुदेवदीक्षितेन - 'यस्य स्थाने अन्यद्विधीयते तत्स्थानि'। स्थानिना तुल्यं वर्तते इति स्थानिवत्, तत्तुल्यकार्यत्वात् 'तेन तुल्यं क्रिया चेद्वति' इति सूत्रेणात्र वत्प्रत्ययः। ननु सूत्रे वत्करणम् किमर्थम्? विनापि तेन तदर्थो गम्यते। यथा 'असंयागाल्लिट् कित्' इति सूत्रेणा संयोगात्प रोऽपिलिट् कित्स्यान्नामात्रापिल्लिट् किद्वत् स्यात्। किन्तु असति वत्करणे संज्ञाप्रकरणात् स्थान्यादेशस्य संज्ञा विधीयते इति विज्ञायते। मैवं विज्ञायीति वत्करणम्। किञ्च स्थान्यादेशस्य संज्ञा इष्यते चेदादेशस्यैव हि संज्ञिनः कार्यं स्यान्न संज्ञाभूतस्य स्थानिनः। तेन 'आङो यमहनः' इति सूत्रेण वधे (आदेशस्य) आत्मनेपदं स्यान्न तु स्थानिरूपस्य हन्तेः। तदा 'आहत', 'आवधिष्ट', इति साधुरूपद्वयं न स्यात्। किन्तु वत्करणे उभयत्रात्मनेपदं भवेदिति। आदिश्यते असौ इति विग्रहे आपूर्वकाद् दिश्धातोः घञि निष्पन्नः आदेशशब्दो नाम प्रकृतिप्रत्ययोः यद्रूपान्तरप्रापणम्। तथाहि शाब्दिकगणनामियं भणितिः - 'आदेश उपघाती यः प्रकृतेः प्रत्ययस्य'।
आपिशलीयसम्प्रदायेऽपि उक्तम् -

**आगमोऽनुपघातेन विकारोश्चोपमर्दनात्।**
**आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात्॥'**

बालमनोरमाख्यटीकाकृन्मते हि - 'येन विधीयमानेनान्यत् प्रसक्तं निवर्तते स आदेशः' इति। ननु सूत्रे कथमादेशग्रहणं कृतम्? सूत्रे स्थानीति सम्बन्धिशब्दः। तत्र यथा 'पितृवदधीते' इत्युक्ते पुत्रग्रहणमन्तरेणाप्यत्र सम्बन्धिशब्दमहिम्ना पुत्र इति गम्यते तथैव स्थानिवदित्युक्तेः विनाप्यादेशग्रहणेन सम्बन्धिशब्दत्वादेश एव स्थानिवद् भवतीति विज्ञायते। विषयेऽस्मिन् समाधिर्निगद्यते यत् प्रत्यक्षानुमानिकभेदेनादेशो द्विविधः। तथाहि 'अस्तेर्भूः' इति सूत्रेण अस्धातोर्भूभावो नाम भ्वादेशः स्यादार्धधातुके परे। सूत्रे अस्भूधात्वोः साक्षात् शब्देन प्रतीतित्वादत्र प्रत्ययरूपादेशो भवति। आनुमानिककस्योदाहरणं हि पचतु इति। अत्र 'एरु' इति सूत्रस्य प्रवृत्तिर्भवति (लोट इकारस्य उः स्यादिति सूत्रार्थः)। पचतु इत्यत्र तीति स्थानी, तु इति आदेशः, न तु एरुरित्यत्र इकारः स्थानी उकारश्चादेशः। अत्र उकारेणेकारन्तः स्थानी तथा उकारेण च उकारान्त आदेशोऽनुमीयते। ततस्तेस्तुरिति सम्पद्यते। तेन असति आदेशग्रहणे प्रत्यक्षस्य ग्रहणं स्यान्न तु आनुमानिकस्य। किञ्च शास्त्रे यस्य क्रियाभिसम्बन्धः साक्षात् शब्देनैव प्रतीयते, यस्य च प्रकरणानुसारमनुमीयते तयोर्मध्ये प्रथमस्यैव

# पुरीश्वराष्टकम्

अधरसुन्दर वदनसुन्दर नयनसुन्दर कौतुक
गमनसुन्दर वसनसुन्दर हसनसुन्दर यौतुक ।
परमपौरुष चरमसाधक भुवनपालक जीवन
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?1

पतितपावन-सुखमहाधन-द्रविण-सम्भवकारण
निखिलपालक-भुवनमोहन-शमनशासक-शासन ।
सकलसज्जन-सवनसज्जित-सगुणनिर्गुण-काशन
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?2

वलयलोचन-सुरतिकोमल-मधुरदर्शन-हासन
नवकलेवर-विबुधशेखर-जलदसुन्दर-वर्षण ।
मदनमोहन-हृदयचन्दन-उदयभास्कर-शोभन
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?3

शरणरक्षण-सुमतिनायक-सुगतिदायक-कीर्त्तन
प्रभुपदार्चित-निगमवन्दित-वचनवाङ्मय-नर्त्तन ।
शुभशुभानन-दशनगौरव-हसनसौरभ-पार्वण
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?4

अगरुचन्दन-लसितदारव-मुनिमनोहर-मोहन
कुसुमसज्जित-भुजविलम्बित-वलयहार-सुशोभन ।
प्रथितशावर-पुरितमन्दिर-गहनसंकट-तारण
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?5

रथविराजित-सुखदसुन्दर-कनकवर्द्धित-वामन
परम-पावनमय-महेश्वर-तरलभक्ति-रसायन ।
श्रुतिकलाकर-विधुरगोपन-गलितमाध्विक-शोषण
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?6

मुकुटमण्डित-कनककुण्डल-नयनमण्डल-लोभन
नगरनागर-रसिकशेखर-विरलरास-विकासन ।
धर धराधर-पतितपामरमशरणं शरणागतं
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?7

सकलसार्थक-गतिविनायक-भवमरुभ्रम-हारक
नवरसात्मक-मधुरसारद-ललितगीत-सुदायक ।
परमवैष्णव-विधुरभावुक-रुचिरकाव्य-विचारण
हर हरप्रिय हरिपुरीश्वर मम मनोगतदारुणम् ?8

**नन्दप्रदीप्तकुमारः**

# प्रणामाञ्जलिं समर्पयामः

वैद्यकुलपतिः कोट्टक्कल डा पि के वारियर, आर्यवैद्यशाला ,केरलम् - आयुर्वेदक्षेत्रे अर्बुद (कानसर) रोगस्य निवारणाय विशेषचिकित्साम् आरब्धवान्,येन बहूनाम् आश्वासः अपि लब्धः । आयुर्वेदविकासाय संस्कृतशिक्षणम् अनिवार्यम् इति निरूपयन् आयुर्वेदपाठनाय प्रोत्साहनं करोति स्म महोदयः । संस्कृतभारती -कार्ये सदा तत्परः निरन्तरं सहयोगं करोति स्म च । संस्कृतभारती - केरलशाखायाः संरक्षकत्वेन अपि तेन मार्गदर्शनं कृतम् आसीत् । मेलनसमये तथैव पत्रद्वारा अपि तदा तदा कार्यान्वेषणं करोति स्म । तादृशः संस्कृतप्रेमी,मान-मसेवी, पारम्पर्यनिष्ठावान् वारियरमहोदयः स्वस्य आयुषः शतं वर्षाणि सारोग्यं सक्रियं पूर्णं कृत्वा अद्य स्वस्थानं प्रतिनिवृत्तः । तस्मै वैद्यराजाय,आयुर्वेद-ऋषिणे सश्रद्धं प्रणामाञ्जलिं समर्पयामः ।

# श्रीरामकथायां मानवीयसंवेदनास्तथा जीवनमूल्यानि

श्रद्धेयः श्रीमैथलीशरण महाभागः

रामझूला

**ऋषिकेशः।** 'श्रीरामकिंकर विचार मिशन' इति संस्थायाः संस्थापक एवम् अध्यक्षः सन्तप्रवरः श्रद्धेयः श्रीमैथलीशरण महाभागः स्वदैनिक सत्सङ्गे 'श्रीरामकथायां मानवीय संवेदनास्तथा जीवन मूल्यानि' इति विषयमङ्गीकृत्य श्रीरामचरितमानसस्य माध्यमेन समुपदेशितवान्- मानवीय संवेदनाया मानवीय मूल्यानाञ्च चारित्रिकसदुपयोगः श्रीरामावतारेणैव शुभारम्भो जातः, यः सर्वसामर्थ्यवान् ईश्वरो भूत्वापि विना कस्यचित् चमत्कारेणैव सो महाभाग मनुष्य पशु खगराक्षसान्नपि स्वात्मना सह योजयित्वा न केवलं सर्वेभ्यो धन्यतां प्रदत्तवान्। अपि च रामराज्यस्य निर्माणे तेषां सर्वेषां साधनरूपे सदुपयोगमपि प्रेम्णा सह कृतवान्। वस्तुतः सगुणोपासकस्य तथा सगुणोपास्य द्वयो उपासनायां मानवीयसंवेदनैव तदस्तित्त्वं विद्यते। भगवान्नपि स्व-अवतरणमाध्यमेन लोकाराधनमेव कृतवान्। ईश्वरः सर्वेषां समाराधनामेकेन सह कर्तुं शक्नोति, तथा भक्ताः केवलमेक मेवाराधनां कुर्वन्ति। प्राणिनां हितस्य क्रमशो विकासैव रामराज्य-मस्ति। यो भगवान् भगवतीकौशल्यायाः हितकारी भूत्वा समागतः। किन्तु सः सर्वेषां प्राणिनां हितैषी जातः। सर्वेषां हितसाधानायां सः प्रभुः सुखदुःख मानापमानादि सर्वान् प्रसन्नतापूर्वकं स्वीकृत्य लोककल्याणमेव कृतवान्। श्रीरामस्य कृते साधूक्तम्-

**'प्रसन्नतां या न गताभभिषेकस्तथा न मम्लै वनवासदुःखतः।**
**मुखाम्बश्रीरघुनन्दनस्य मे सदास्तु स मञ्जुलमङ्गलप्रदा॥'**

यस्य नामपुनीतप्रतापेन सागरे पाषणानि तर्तुं शक्नुवन्ति, धन्योऽस्ति भगवान् श्रीरामो यो रावणोपरि विजयप्राप्तश्रेयं श्रीगुरुदेवकृपां मन्यते। तथैव सः प्रभुः युद्धे वानराणां प्रयासं गुणगानं करोति निषादराजकेवटं स्वभ्रातृभरततुल्यैव प्रियमुक्तवा तत्सम्मानस्य प्रेमप्रतिष्ठां सम्वर्धते। श्रीहनुमन्तं महाभागं श्रीलक्ष्मणतो द्विगुणं कथयति। भक्तिमतीशबरीदेव्याः फलानि अयोध्यायाः समधुराणि तुल्यानि वदन्ति। भगवतीं शबरीं नवधाभक्तिपरिपूर्णामुक्तवा समदृष्टिसुभावानां प्रकटयति। शरणागतं विभीषणमहाभागं सागरं च सम्मानं करोति। युवराजमगंदमहाभागं परमचतुरं कथयित्वा युवसशक्तिचेतनायां शक्तिप्रस्फुरणं कृत्वा तत्समुत्साहं वर्धयति। भगवतः श्रीरामस्य एतादृशा व्यापकदृष्टिरेव तदखण्डता अनन्तता व्यापकता चास्ति।
श्रीरामः सर्वान् पूर्णं कृत्वैव पूर्णतां प्राप्तवान्।
भगवतः श्रीरामस्य ये समुपासकाः सन्ति यस्मिन् तत्पितृमहाभागतः श्रीशिवशंकरो यावत् सर्वेषामुपासानायां कश्चिद्विकल्पो न वर्तते ।

## 'सर्वज्ञानमयो हि सः'

शिष्यतेऽनेनेति शास्धातोः 'सर्वधातुभ्यष्ट्रन्' इति ष्ट्रनि निष्पन्नः शास्त्रशब्दो निदेशार्थकस्य ग्रन्थरूपस्य वा वाचकः। तच्च शास्त्रं मनुजनूनां सन्मार्गनिर्देशकम्। जगत्यस्मिन् उपलब्धेषु बहुविधेषु शास्त्रेषु वेदशास्त्रं हि अन्यतमं सर्वविधज्ञानप्रतिपादितत्वात्। वेद्यतेऽनेनेति ज्ञानार्थकाद् विद्धातोरचि वेदशब्दो निष्पन्नः। स चोपचाराद् ग्रन्थशब्दस्यापि वाचको भवति। वेदार्थानुशीलनेन ज्ञायते यद् वेदा हि विविधज्ञानविज्ञानराशयः संस्कृतेराधाररूपाः कर्तव्याकर्तव्यबोधकाः शुभाशुभनिर्देशकाः विश्वहितसम्पादिकाः चतुर्वर्गावाप्ति-सोपानस्वरूपाश्च सन्ति। अतएव अखिलज्ञानराशिर्हि वेदः इति वक्तुं शक्यते। तथाहि 'सर्वज्ञानमयो हि सः' इति भणता मनुना वेदानां सर्वविधज्ञाननिदानमुररीकृतम्। अतः तज्ज्ञानपीयूषपयोधारावगाहनं वेदाङ्गव्यतिरेकेण अन्येन केनाप्युपायान्तरेण न कर्तुं शक्यते। तस्मात् शास्त्रेषु अध्ययनविधिरेव विधीयते। विषयेऽस्मिन् महाभाष्यका-रस्य भाष्यवचनमनुसन्धेयम् - 'ब्राह्मणनेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च'1 इति। अतएव वेदानां साधुज्ञानार्थं षण्णां वेदानां ज्ञानमावश्यकम्। यद्यप्यद्यत्वे कातन्त्रमुग्ध बोध सारस्वताभिधानानि विविधानि व्याकरणान्युपलभ्यन्ते तथापि सर्वेषां न वेदाङ्गत्वम्। निखिललौकिकशब्दानां व्युत्पादकतया पानिणीयव्याकरणमेव सर्वेषां मूर्धन्यं धन्यं च सद् वेदाङ्गतामाधत्ते। तच्च पाणिनीयं शास्त्रं सूत्रजालावद्धम्। इत्यादिना यत् षड्विधं सूत्रलक्षणं निगदितं तेषु अतिदेशसूत्रं ह्यन्यतमम्। अतिदेशो नामा परसा मान्यत्रारोपः। अतएव कस्यचित् स्थानस्य निमित्तार्थं प्रणीतकार्यद्वारा अन्यत्र प्राप्तिर्हि अतिदेशः। यथा 'अक्षय्योदकदानं तु अर्घ्यदानवदिष्यते' इत्यत्रार्घ्यदानवद् अक्षय्योदकदानस्य पृथग्दानरूप धर्मस्यातिदेशो भवति। अतिदेशसूत्रं प्रायशः वदिवादिशब्दद्वारा निरूपितम्। वैदिककर्मवत् लौकिककर्मणि तथा मीमांसाशास्त्रवद् व्याकरण शास्त्रेऽपि अतिदेशस्य प्रयोगः प्रसिद्धः। यथा लोके तावदेकस्मिन् उपाध्याये मृते तत्स्थाननि विष्टस्यापि अभिवादनाद्युपाध्यायधर्मलाभो भवति, एकस्मिन् च राजनि प्रोषिते तत्स्थाने अभिषिक्तस्य तत्पुत्रादेरपि भवति। वेदेऽपि नीवारादयोऽवघातादीन् ब्रीहिधर्मान् लभन्ते।

## त्यागरूपं प्रहातव्ये प्राप्ये संसर्गदर्शनम्

प्रसिद्धं लौकिकं प्रयोगम् उद्दिश्य शास्त्रेण साधुत्वम् अन्वाख्यायत इति, यथा प्रयोगम् उपायपरिकल्पनया पचत्यादिधातुविषये क्रियासमुदाये अभेदविवक्षा, निगल्हादिधातुविषये तु भेदविवक्षा, गत्यर्थधातुविषये तु भेदाभेदविवक्षा नियता इत्यर्थः। वस्तुतः क्रियासमुदायस्य भेदाभेदविवक्षयोः लौकिकप्रयोगाधीनत्वप्रयुक्तनियमस्य अनाश्रयणे सकर्मकाकर्मकधातुविषये गत्यर्थकेषु च धातुषु सर्वत्र कर्मसम्प्रदानसंज्ञयोः आपत्त्या नियमार्थं गत्यर्थकर्मणीत्यादिसूत्रं भाष्यकारो न प्रत्याचक्षीत। यतः प्रत्याख्याने गत्यर्थकधातुतः अन्यत्रापि कर्मसम्प्रदानसंज्ञयोः आपत्तिरूपातिप्रसङ्गः स्यात्। यदा तु तयोः विवक्षानियमो भाष्यकारस्य चेतसि स्फुरति, तदा अतिप्रसङ्गानापत्त्या सूत्रारम्भप्रत्याख्यानयोः फलवशेषं मन्यमानः भाष्यकारः यदेतत् सूत्रं प्रत्याचक्षीत तदयुक्तम्। तदेवं गत्यर्थधातुविषये भेदाभेदविवक्षाद्वयम्। तेन ग्रामाय गच्छति, ग्रामं गच्छति इत्यत्र कर्मसम्प्रदानद्वयसिद्धिः। श्राद्धाय निगल्हते, युद्धाय सन्नहते, पत्ये शेते इत्येवमादौ अकर्मकधातुविषये तु भेदविवक्षैव। तेन एषु नियता एव सम्प्रदानसंज्ञा। पचति ओदनमित्यादिषु गत्यर्थातिरिक्तसकर्मकधातुविषये तु क्रियास-मुदाये अभेदविवक्षा एव। तेनात्र नियता कर्मसंज्ञा एव। चेष्टायामनध्वनि इत्येतत् प्रत्युदाहरणयोरपि च अभेदविवक्षैव। तेन मनसा पाटलिपुत्रं गच्छति, अध्वानं गच्छति इत्यत्र आद्ये चेष्टया अभावात्, द्वितीये अध्वन एव गतिकर्मत्वात् अभेदविवक्षया नियता कर्मसंज्ञैव, न सम्प्रदानसंज्ञेति। गत्यर्थसूत्रारम्भे स्त्रियं गच्छति, अजां नयति इत्यत्र सम्प्रदानसंज्ञाप्रयुक्त-चतुर्थ्यापत्तिरूपातिप्रसङ्गे प्राप्ते सिद्धं तु असम्प्राप्तवचनाद् इत्युक्तं वार्तिककृता।
असम्प्राप्तं गमनेन असम्बद्धं यत् कर्म, तत्र द्वितीयाचतुर्थ्यौ वक्तव्ये ग्रामाय गच्छति, ग्रामं गच्छति इति। अत्र ग्रामो न गमनकाले गमनक्रियया सम्बद्धः। अत्र असम्प्राप्तवचनात् द्वितीयाचतुर्थ्यौ भवतः। अजासिद्धौ तु सम्प्राप्ते गमनकाल एव गमनक्रियया सम्बद्धे कर्मणी इति चतुर्थ्यापत्तिरूपातिप्रसङ्गः न भवति। एवञ्च कृत्वा गत्यर्थकर्मणीति सूत्रारम्भे 'अध्वनश्चानपवादः' इत्युक्तं भवेत्। 'गत्यर्थकर्मणि' इति सूत्रे असम्प्राप्तवचने कृते अनध्वनि इति प्रतिषेधः न वक्तव्यः। अध्वा हि गमनेन सम्प्राप्तं कर्म इह अनध्वनीति प्रतिषेद्धुम् अभिप्रेतः। तस्य चेह असम्प्राप्तवचनादेव निषेधः सिद्धः। अत एव भाष्ये अभिहितम् - 'आस्थितप्रतिषेधो वक्तव्यः' इति। अनास्थितमार्गे तु चतुर्थी भवत्येव। वस्तुतः किं रूपः असौ आस्थितः इति प्रश्ने प्राह -
त्यागरूपं प्रहातव्ये प्राप्ये संसर्गदर्शनम्।
आस्थितं कर्म यत् तत्र द्वैरूप्यं भजते क्रिया।।27 इति।
वैयाकरणा अपि पाणिनीयसूत्रे 'कर्मणा यम्' इति द्वितीयानिर्देशात् कर्मकारकं प्रति सम्प्रदानस्य ईप्सितत्वं स्वीकृत्य फलभागित्वेन ईप्सितत्वं सम्प्रदानत्वमिति अङ्गीकुर्वन्ति। तथा च क्रियाकर्मसम्बन्धितया इच्छाविषयकम्, क्रियाकर्मसम्बन्धजन्यफलभागित्वेन इच्छाविषयत्वं वा सम्प्रदानत्वम् इति सिद्ध्यति। यद्यपि सम्प्रदानमिति महासंज्ञाकरणात् अन्वर्थत्वं स्वीकरणीयम्, तथापि 'क्रियाग्रहणं कर्तव्यम्' इति वार्तिकं प्रत्याख्याय पत्ये शेते इत्यादिषु मुख्यसम्प्रदानत्वप्रतिपादकभाष्यप्रामाण्येन अन्वर्थता नैव विज्ञायते। एवं च 'यत्क्रियाकर्मसम्बन्धफलभागित्वेन उद्देश्यं यत् तत् क्रियासम्प्रदानम्' इति सिद्धम् । 'विप्राय गां ददाति' इत्यत्र दानक्रियाकर्मकारकेण गोद्रव्येण यः सत्त्वाख्यः विप्रस्य सम्बन्धः तज्जन्यफलं सुखादि, तद्भागित्वेन उद्देश्यत्वं विप्रे इति स दानक्रियासम्प्रदानमिति लक्षणसमन्वयः।

## 'आदेश उपघाती यः प्रकृतेः प्रत्ययस्य'

पाणिनीयव्याकरणे उपलब्धेषु अतिदेशसूत्रेषु 'स्थानिवदादेशेऽनलविधौ' इति प्रधानं मूर्धन्यञ्चातिदेशसूत्रम्। प्रस्तुतसूत्रेणैवादौ पाणिनिना स्थानिवद्भावः प्रदर्शितः। स्थानिलक्षणम् ननु को नाम स्थानिवद्भावः इति जिज्ञासा स्वत एव समुदेति। स्थानं नाम प्रसङ्ग इति। स्थानमस्यास्तीति स्थानशब्दाद् मत्त्वर्थीये णिनिप्रत्यये स्थानिशब्दो निष्पन्नः। स्थानिलक्षणं निगदितं बालमनोरमाख्यटीकायां वासुदेवदीक्षितेन - 'यस्य स्थाने अन्यद्विधीयते तत्स्थानि'। स्थानिना तुल्यं वर्तते इति स्थानिवत्, तत्तुल्यकार्यत्वात् 'तेन तुल्यं क्रिया चेद्वति'6 इति सूत्रेणात्र वत्प्रत्ययः। ननु सूत्रे वत्करणम् किमर्थम्? विनापि तेन तदर्थो गम्यते। यथा 'असंयागाल्लिट् कित्'7 इति सूत्रेणासंयोगात्परोऽपिलिट् कित्स्यान्नामात्रापिल्लिट् किद्वत् स्यात्। किन्तु असति वत्करणे संज्ञाप्रकरणात् स्थान्यादेशस्य संज्ञा विधीयते इति विज्ञायते। मैवं विज्ञायीति वत्करणम्। किञ्च स्थान्यादेशस्य संज्ञा इष्यते चेदादेशस्यैव हि संज्ञिनः कार्यं स्यान्न संज्ञाभूतस्य स्थानिनः। तेन 'आङो यमहनः' इति सूत्रेण वधे (आदेशस्य) आत्मनेपदं स्यान्न तु स्थानिरूपस्य हन्तेः। तदा 'आहत', 'आवधिष्ट', इति साधुरूपद्वयं न स्यात्। किन्तु वत्करणे उभयत्रात्मनेपदं भवेदिति। आदिश्यते असौ इति विग्रहे आपूर्वकाद् दिश्धातोः घञि निष्पन्नः आदेशशब्दो नाम प्रकृतिप्रत्ययोः यद्रूपान्तरप्रापणम्। तथाहि शाब्दिकगणनामियं भणितिः - 'आदेश उपघाती यः प्रकृतेः प्रत्ययस्य'। आपिशलीयसम्प्रदायेऽपि उक्तम् - आगमोऽनुपघातेन विकारोश्चोपमर्दनात्। आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात्। बालमनोरमाख्यटीकाकृन्मते हि - 'येन विधीयमानेनान्यत् प्रसक्तं निवर्तते स आदेशः' इति।ननु सूत्रे कथमादेशग्रहणं कृतम्? सूत्रे स्थानीति सम्बन्धिशब्दः। तत्र यथा 'पितृवदधीते' इत्युक्ते पुत्रग्रहणमन्तरेणाप्यत्र सम्बन्धिशब्दमहिम्ना पुत्र इति गम्यते तथैव स्थानिवदित्युक्तेः विनाप्यादेशग्रहणेन सम्बन्धिशब्दत्वादेश एव स्थानिवद् भवतीति विज्ञायते। विषयेऽस्मिन् समाधिर्निगद्यते यत् प्रत्यक्षानुमानिकभेदेनादेशो द्विविधः।

## 'क्रियया यमभिप्रैति स सम्प्रदानम्'

साधारणतः अकर्मकक्रियाया एव। तथाहि - ''ननु कर्मणेत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह क्रियेति। कर्मरोहितक्रिययेत्यर्थः''19 इति।
अत्र वार्तिककारेण अकर्मकक्रियाया उदाहरणं दीयते श्राद्धाया निगर्हते, युद्धाय सन्नहते, पत्ये शेते इति। यत्र सकर्मकक्रियायाः प्रयोगो दृश्यते, परन्तु कर्म अश्रूयमानं, तत्र गम्यमानकर्म आधारीकृत्य पाणिनिसूत्रेणैव सम्प्रदानत्वम्। यथा तस्मै (कथां) कथयति इति। अत्र सकर्मकक्रियायाम् अकर्मकरूपेण स्वीकृत्य 'क्रियया यमभिप्रैति स सम्प्रदानम्' इति वार्तिकेनापि सम्प्रदानत्वं स्वीकर्तुं शक्नुयात्। अत्र द्वितीयमतस्य आवश्यकता एतदर्थमेव यत् नैके वैयाकरणाः (दीक्षितादयः) पाणिनिसूत्रस्थेन कर्मणा इति पदेन केवलं दानस्य कर्मणा इति स्वीकृतवन्तः, न अन्यक्रियाम्।
'पत्ये शेते' इत्यस्यार्थः सम्प्रदानभूतपतिम् उद्दिश्य शयनम्। प्रयोगेऽस्मिन् पाणिनिसूत्रेण सम्प्रदानत्वं न सिद्ध्यति, परन्तु वार्तिकेन सिध्यति। केषाञ्चिन्मते पत्ये शेते, युद्धाय सन्नहते इत्यादौ 'क्रियार्थोपपदस्य कर्मणि स्थानिनः'21 इति सूत्रेण चतुर्थी भवितुमर्हति। अनुकूलयितुम् कर्तुम् इत्यादितुमुन्प्रत्ययान्तक्रियायाः अध्याहारेण पतिमनु-कूलयितुं शेते, युद्धं कर्तुं सन्नहते इत्यादिक्रमेण अत्र कर्मणि चतुर्थी अपि सङ्गता भवेत्। परन्तु भाष्यकारेण प्रकृतसम्प्रदानसूत्रेणैवात्र सम्प्रदानत्वं स्वीकृत्य वार्तिकं प्रत्याख्यातम्। पतञ्जलिमते गो-प्रभृतिकर्मणां सम्बन्धीरूपेण यत् उद्देश्यं, तस्य यथा सम्प्रदानत्वं तथैव क्रियाया अपि सम्बन्धीरूपेण यत् उद्देश्यं तस्यापि सम्प्रदानत्वं प्रकृतपाणिनीयसूत्रेणैव सिद्ध्येत्। कारणं लोके क्रिया इत्यस्य कर्मरूपेण व्यवहारः दृश्यते। यथा 'कां क्रियां करिष्यति' इत्यस्यार्थः 'किं कर्म करिष्यति' इति।
क्रियायाः कृत्रिमत्वं कथं सङ्गच्छते इति चेत् आह भाष्यकारः क्रियापि क्रिययेप्सिततमा भवति। कया क्रियया? सन्दर्शनक्रियया वा, प्रार्थयति क्रियया वा, अध्यवस्यतिक्रियया वा। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुध्या कञ्चिदर्थं संपश्यति सन्दृष्टे प्रार्थना, प्रार्थनायामध्यवसायः, अध्यवसाये आरम्भः, आरम्भे निवृत्तिः, निवृत्तौ फलावाप्तिः। एवं क्रियापि कृत्रिमं कर्म इति।22 सन्दर्शनं प्रार्थना, अध्यवसायः, आरम्भः, निवृत्तिः इत्येताः क्रियाः क्रमात् भवन्ति। आदौ मनुष्याः पश्यन्ति - एतद् वस्तु एवम् इति। दर्शनादनन्तरं वस्तुग्रहणस्य आकांक्षा जागरिता भवति। तस्य वस्तुनः प्राप्त्यर्थम् अध्यवसायः प्रारभते। आरम्भात् प्रयत्नाद् वा अभीप्सितफलस्य प्राप्तिर्घटते - एतदेव निवृत्तिः। अत्र एका क्रिया अपरक्रियायाः कर्म। पूर्वपूर्वक्रियां प्रति परपरक्रियायाः 'कर्तुरीप्सिततमं कर्म' (1.4.49) इति सूत्रेण कर्मत्वं सिद्ध्यति। अतः तत् कृत्रिमं कर्म। पूर्ववर्तिप्रार्थना-प्रभृतिक्रियायाः कर्म शयनक्रिया। तस्याः उद्देश्यं खलु पूर्वोक्तवाक्ये पतिरिति। तस्मात् तस्य 'कर्मणा यमभिप्रैति...' इत्यादिसूत्रेणैव सम्प्रदानत्वम्। अत्र वार्तिकस्य नास्ति आवश्यकत्वम्। परन्तु पूर्वोक्त्याः सन्दर्शन-प्रार्थनादयः क्रियाः यतः सार्वत्रिकं - अर्थात् सकलक्रियाविषये एव तादृशं कर्म सम्भवेत् तस्मात् कटं करोति, ओदनं पचति इत्यादिस्थले पूर्वोक्तप्रकारेण कटस्य, ओदनस्य सम्प्रदानत्वसिद्धये कटाय करोति, ओदनाय पचति एवं प्रयोगः कथं न भवेत्? अत्रोच्यते कैयटेन -
सन्दर्शनप्रार्थनाप्रभृतयः क्रिया यदा धातोः अर्थस्वरूपक्रियातः भिन्नरूपेण प्रतीयमानाः भवन्ति तदा तत्र सम्प्रदानत्वम्। वस्तुतः सन्दर्शनादिक्रियाया अभेदेन धातुना अभिधानात् कथं भेदाश्रयः क्रियाकारकभावो युज्यते इत्यत्र समर्थयितुमाह भर्तृहरिः - भेदस्य च विवक्षायां पूर्वां पूर्वां क्रियां प्रति। परस्याङ्गस्य कर्मत्वान्न क्रियाग्रहणं कृतम् ।
सन्दर्शन-प्रार्थनाध्यवसायैः आप्यमानत्वात् क्रियापि कृत्रिमं कर्म। तत्र प्रेक्षापूर्वकारिणः प्रवृत्तौ आवश्यकेन सन्दर्शनादयः सन्निहिता प्रतीयन्ते इति तेषां प्रधानक्रियाया भेदविवक्षायां पूर्वक्रियापेक्षयोत्त-रोत्तरस्याङ्गस्य प्रधानक्रियार्थस्य कर्मत्वम् अविरुद्धं पूर्वपूर्वक्रियया आप्यमानत्वात् इति क्रियाया अपि कर्मतायां कयाभिसम्बध्यमानस्य सूत्रेणैव सम्प्रदानता सिद्धा इति क्रियाग्रहणं प्रत्याख्यातम्। ददाति कर्मणा इत्ययं विशेषः नाङ्गीक्रियते। तदत्र अधुना प्रधानक्रियैव उच्यते। सामर्थ्यप्राप्तास्तु सन्दर्शनादयः ततो भिन्ना इति क्रियाकारकभावोत्पत्तिः।
यदि एवम् ओदनं पचति इत्यादौ सकर्मकधातौ अपि क्रियारूपेण कर्मणा अभिप्रेयमाणस्य ओदनस्य विनिगमनाविरहात् सम्प्रदानसंज्ञा स्यात्, कर्मसंज्ञा तु क्रियारूपेण कर्मसु सावकाशा, द्वितीयाचतुर्थ्योस्तु शास्त्रारम्भसामर्थ्याद् विकल्पः अस्तु इत्यत आह -
क्रियाणां समुदाये तु यदैकत्वं विवक्षितम्।
तदा कर्म क्रियायोगात् स्वाख्ययैवोपचर्यते।।
अर्थात् सन्दर्शनादिक्रियासमूहः परस्परमङ्गाङ्गिभावम् आपन्नः समप्राधान्येन साहित्यम् आपद्यमानरूपः यदा एकफलवत्त्वाद् अभेदेन धातुना अङ्गीक्रियते तदा भेदप्रयुक्तस्य क्रियाकारकभावस्य अप्रतीतेः अप्राप्तकर्मभावया क्रियया सम्बध्यमानम् ओदनादिकर्म स्वव्यपदेशेनैव क्रियया आप्तुम् इष्टतमत्वरूपं स्वनिमित्तं प्राप्तं कर्मसंज्ञया एव व्यवह्रियते, न तु सम्प्रदानसंज्ञया, क्रियासमुदायस्य अभेदनाभिधानात्। भेदनिमित्तकस्य अङ्गाङ्गिभावस्य अभावादत्र पक्षे क्रियायाः कर्मरूपता नास्तीति। एवं तर्हि ओदनं पचतीत्यत्र क्रियासमुदायस्य उद्भूतावयवभेदविवक्षायाम् ओदनादेः क्रियारूपेण कर्मणा सम्बध्यमानस्य सम्प्रदानता स्यादिति आशङ्क्याह - भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**